ADDITIONAL

# LEARNING MATERIALS

೩

www.sanskritkerala.gov.in

# अभ्यासपुस्तकम्

## UP Section

- कविता।
- कथा।
- विवरणम्।

रवीन्द्रः

# उद्यानम्

आगच्छन्तु बालाः आगच्छन्तु
उद्यानं द्रष्टुमत्रागच्छन्तु।
हरितवर्णयुक्तपादपास्तु
छायां प्रदाय परिलसन्ति।
शोभते तत्र लतागृहं च
भिन्नलतादिभिरावृतं तत्।
पुष्पगुच्छां तां परिमृजन्ति
चित्रपतगाः मधुपानार्थम्।

श्वेतवर्णयुक्तं कुन्दजालम्
पीतवर्णयुक्तं कर्णिकारम्।
यत्र मनोहरं शङ्खपुष्पम्
नीलवर्णोज्वलं भाति तत्र।
पाटलपुष्पात् मधु पिबन्तं
भृङ्गसमूहं मनोमोहनम्।
कपिशवर्णं तथा रक्तवर्णम्
धृत्वा जपाकुसुमानि भान्ति।
उद्यानमेवं विचित्रवर्णम्
हृद्यतरमवलोकयन्तु।।

# आयान्तु बाला....

आयान्तु बाला उपयन्तु सर्वे
उद्यानसौन्दर्यविलोकनाय।
उत्फुल्लपुष्पैः नवपल्लवैश्च
रम्यैश्च वृक्षैः दलमर्मरैश्च
विराजमाना विपिनस्य कान्तिः
युष्माभिरेवं परिपालनीया।

विराजते तत्र लतागृहं नवं
संदर्शकानां हृदि तोषवर्धकम्
विहङ्गमास्तत्र द्विरेफपङ्क्तयः
आयान्ति नूनं मधुरान्वितस्वरैः
विभाति कुन्दं धवलाभिरामं
स्मितोपमं काननभाग्यसूचकम्।

धृताङ्गरागैः परिपूतवृक्षः
संशोभते नूतनकर्णिकारः
नीलावृतं सुन्दरशङ्खपुष्पं
व्योमोपमं भाति सहस्रशोभं
वर्णैश्च धर्मैश्च गुणैश्च भिन्नं
सम्मोहनोद्यानमिदं चकास्ति।

स्मारयन् गोपिकाकामुकं सर्वदा
भृङ्गो मधुपानतत्परो गुञ्जति
रक्तधवलकपिशवर्णादिकं
धृत्वा जपाकुसुमावलिराजते।

कस्याश्चन नद्याः तीरे कश्चन तमालवृक्षः **आसीत्**। वृक्षेऽस्मिन् कपोतः एकः प्रतिवसति स्म कदाचित् एका पिपीलिका नद्याम् **अपतत्**। अधुना अहं मरिष्यामि इति सा उच्चैः **विलपति स्म**। एतत् दृष्ट्वा कपोतः एवम् **अचिन्तयत्**- "येनकेनापि प्रकारेण पिपीलिकां रक्षिष्यामि। नो चेत् सा परलोकं गमिष्यति" इति। अहं पर्णमेकं ताव समीपंनिक्षिप्स्यामि तं पर्णम् आरुह्य नदीतीरं प्राप्नुयाः इति पिपिलिकाम् **अवदत्**। नूनम् अहं तीरं गमिष्यामि इति पिपीलिका **अचिन्तयत्** ।सा झटिति पर्णमारुह्य तीरं प्राप। अहमपि प्रत्युपकारं करिष्यामि इति सा **निश्चयमकरोत्**।

अन्यस्मिन् दिने कपोतः कस्यचन निषादस्य शरव्यः **अभवत्**। एतत् दृष्ट्वा पिपीलिका एवम् **अचिन्तयत्**- "व्याधः नूनं

कपोतं हनिष्यति, ततः पूर्वम् अहं तं कपोतं रक्षिष्यामि" इति। पिपीलिका शीघ्रं धावित्वा व्याधस्य पादमूलम् **अदशत्**। पिपीलिकायाः दशनेन व्याधस्य लक्ष्यं भिन्नोऽभवत्। कोलाहलं श्रुत्वा कपोतः कृतज्ञतया पिपीलिकां वीक्ष्य ततः **अडयत** च।

# अभिनयगीतम्

अङ्गुष्ठराज! कुत्रास्ति ? (२)
अङ्गुष्ठराज! अत्रास्मि (२)
सुखमेव वा ते सुखमेव वा?
सुखमेव मे सुखमेव मे
पश्चात् गतौ राजानौ।

तर्जनिराणि कुत्रास्ति? (२)
तर्जनिराणी अत्रास्मि (२)
सुखमेव वा ते सुखमेव वा?
सुखमेव मे सुखमेव मे
पश्चात् गते दैव्यौ ते।।

मध्यमराणि कुत्रास्ति? (२)
तर्जनिराणी अत्रास्मि (२)
सुखमेव वा ते सुखमेव वा?
सुखमेव मे सुखमेव मे
पश्चात् गते दैव्यौ ते।।

अनामिकराणि कुत्रास्ति (२)
अनामिकराणी अत्रास्मि (२)
सुखमेव वा ते सुखमेव वा?
सुखमेव मे सुखमेव मे
पश्चात् गते दैव्यौ ते।।

कनिष्ठिकराणि कुत्रास्ति ?(२)
कनिष्ठिकराणी अत्रास्मि (२)
सुखमेव वा ते सुखमेव वा ?
सुखमेव मे सुखमेव मे।
पश्चात् गते दैव्यौ ते।।

राजा च राण्यः कुत्र सन्ति ? (२)
राजा च राण्यः सन्त्यत्र (२)
सुखमेव वा वः (२)
सुखमेव नः (२)
पश्चात् गताश्च सर्वेऽपि।

# दिनचर्या

अम्ब! अम्ब! कृपया वदतु दिनचर्या नाम?
बाल्यादस्याः साङ्गत्यमपि कृपया मां वदतु।

पुत्र! अनेन ते प्रश्नेन तुष्टा संवृत्ता
शृणोतु तस्मादुत्तरमधुना अवधानेन सह।
दिने दिने यत्कर्म करोति कोऽपि यथाकालम्
तदेव तस्य 'दिनचर्या' इति तनय! जनातु।

एवं चेद्वद मातः! मनसि कौतुकमुपयाति
प्रातःकालात् निद्रां यावत् किं किं करणीयम्?

उदयात् पूर्वं उत्थानं तु प्रथमं करणीयम्
करयुगदर्शनमतश्च भूमीवन्दनमपिकार्यम्।
वदनक्षालन-दन्तधावनशौचादिकार्यम्
ततश्च धावन-योगादिभिः देहरक्षा करणीया।

पुनश्च स्नानं शुद्धजलेऽस्मिन् कुर्याद् विधिपूर्वम्
परञ्च प्रातराशः खाद्यः मितहितमाहारः।

लोके अस्मिन् जलम्, अन्नम्, सुभाषितं च रत्नानि इव परिगण्यन्ते। उक्तं च -"पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम्" इति। लोके यथा रत्नानि अमूल्यानि तथा जलम्, अन्नम्, सुभाषितं च अमूल्यान्यैव। तेषु जलं प्रधानं स्थानम् आवहति। इदं जलं जीवनम् इति कथयति। जलेन विना दिनमेकमपि यापयितुं न शक्नोति। किन्तु अधुना शुद्धजलाय मानवाः बहु क्लेशम् अनुभवन्ति। अस्मात् जलात् एव सर्वेषां जीवजालानाम् उत्पत्तिः। अतः जलस्य सदुपयोगः अवश्यं कार्यः। तथा च वक्तुं शक्यते जले सर्वं प्रतिष्ठितम् इति।

# अभिनयगीतम्

दक्षिणहस्तम् उद्धृत्य
दक्षिणहस्तम् अवनम्य
भ्रमणं कृत्वा क्रीडामः
भ्रमणं कृत्वा क्रीडामः।

वामं हस्तम् उद्धृत्य
वामं हस्तम् अवनम्य
भ्रमणं कृत्वा क्रीडामः
भ्रमणं कृत्वा क्रीडामः।

सम्यग् ऊर्ध्वं संवीक्ष्य
पश्चात् भूमिम् अवलोक्य
शीर्षं सम्यक् सञ्चाल्य
भ्रमणं कृत्वा क्रीडामः।

दक्षिणपादम् उद्धृत्य
दक्षिणपादम् अवनम्य
भ्रमणं कृत्वा क्रीडामः
भ्रमणं कृत्वा क्रीडामः।

वामं पादम् उद्धृत्य
वामं पादम् अवनम्य
भ्रमणं कृत्वा क्रीडामः
भ्रमणं कृत्वा क्रीडामः।

# मूर्खः शृगालः



एकदा कश्चन शृगालः अकस्मात् नगरं प्राप्तः। केचन शुनकाः तं पीडितुम् उद्युक्ताः। तेभ्यः रक्षां प्राप्तुं शृगालः अधावत्। झटित्यसौ नीलवर्णमिश्रिते जलपात्रे अपतत्। पात्रात् बहिरागतः सः स्वशरीरं दृष्ट्वा अद्भुतस्तब्धः अभवत्। सर्वत्र नीलवर्णः। सः एवं अचिन्तयत् - इदानीमहम् अन्येभ्यः विचित्रः एव, वनराजो भवितुम् अयमेव उत्तमः अवसरः इति। सः वनं प्रत्यागतवान्। विचित्रं तं दृष्ट्वा अन्ये जन्तवः भयचकिताः अभवन्। तेषु कोऽपि तं प्रत्यभिज्ञातुं न समर्थः अभवत्। सः तान् जन्तून् एवमवदत् - " भोः सुहृदः भयं मास्तु, इतः परम् अहमेव भवतां राजा। अहं ब्रह्मणा नियुक्तः अस्मि। अतश्च सर्वे माम् अनुसरन्तु " इति। तेन च सिंह- व्याघ्र- वनमहिष-गज-सूकर- गण्डकादयः शक्ताः अशक्ताः चेति सर्वे जन्तवः असेवन्त। ततः प्रभृति शृगालः वनराजः अभवत्।

गच्छता कालेन सः महान् गर्विष्ठः अभवत्। एकस्मिन् रात्रौ शृगालराजः भोजनानन्तरं विश्रमं कुर्वन्नासीत्। तदा सः दूरात् कुतश्चित् केषाञ्चन शृगालानाम् आक्रोशम् अशृणोत्। बहुवारम् अमुम् आक्रोशं श्रुत्वा सः पुलकितः अभवत्। सः आत्मानं विस्मृत्य स्वभावानुसारम् आक्रोशमकरोत्। अन्ये जनाः आक्रोशममुम् अश्रृण्वन्। ते अचिन्तयन् कथमिव अस्माकं राजा शृगालमिव आक्रोशति? विचित्रमेतत् इति। अनन्तरं सः शृगालः एव इति प्रत्यभिज्ञाय ते जन्तवः तं शृगालराजम् अमारयत्।

# माता देवता।

हरितमनोज्ञे कस्मिंश्चित् ग्रामे कश्चनः बालकः पित्रा सह निवसति स्म। पिता अतीव दरिद्रः रोगातुरश्च आसीत्। अतः बालोऽयं समीपस्थेषु आपणेषु यावच्छक्यं साहाय्यं दत्वा उपजीवनमकरोत्। कदाचित् स बालः एकाकी अटन् कञ्चित् पुष्पापणं आगच्छत्। तस्य मनांसि पुष्पमालां क्रेतुम् अभिलाषो अजायत। किन्तु धनहीनः सः निराशया पुष्पमालां पश्यन् तत्रैव अतिष्ठत्। अचिरेण तस्य नयने अश्रुपूर्णे अभवताम्। चिन्तामग्नः सः पुष्पापणात् नातिदूरम्  गत्वा कस्यांचित् शिलायाम् उपाविशत्।



कञ्चित् कालानन्तरं तेनैव मार्गेण आगतः कश्चन पुरुषः शिलायाम् उपविश्य रुदन्तं बालमपश्यत्। सः बालस्य समीपम् आगत्य स्कन्धे हस्तेन संस्पर्श्य रे बालकः किमर्थं रोदिषि इत्यपृच्छत्। तस्य महाशयस्य स्नेहपूर्णं वाक्यं श्रुत्वा अश्रूणि प्रमार्ज्य स कातराभ्यां नयनाभ्यां महाशयस्य तस्य मुखमीक्षितवान्। अनन्तरं अहं पुष्पमालां क्रेतुमिच्छामि। किन्तु मम हस्ते किञ्चिदपि धनं नास्ति इत्यवदत्। तच्छ्रुत्वा बालवचनम्  बालपचनं किमर्थं पूष्पमालां इच्छसि? कस्मै दातव्या त्वया इति तं पुनरपृच्छत्।
बालः प्रत्यवदत् च। मम मात्रे पुष्पमालां दातुमिच्छामि इति। बालकस्य

अभिलाषकारणं परिपूर्णं ज्ञातुकामः सः पुरुषः मालामेकां क्रीत्वा तस्मै बालाय अयच्छत्। अथ अवदच्च। तव माता कुत्र वर्तते? अहं दिदृक्षामि इति। बालकः सानन्दं तमानीय किञ्चिद्दूरे स्थितं श्मशानमगच्छत्। श्मशानं दृष्ट्वा बालेन किमर्थम् अत्र अहम् आनीतः इति चिन्तयन् पुरुषः अपृच्छत्। एतत् श्मशानम् अस्ति। अत्र तव माता कुत्रास्ति? इति ।

बालः अवदत्। मम माता अत्र स्वर्गे निवसति। अतः अहमपि अत्र सदा आगन्तुमिच्छामि इति। आश्चर्येण सः पुरुषः पुनरपि अवदत्। रे बाल! एतत् श्मशानम् अस्ति। न स्वर्गः इति। तच्छ्रुत्वा बालकोवदत् यत्र मम माता तत्रैव स्वर्गः। यदा सा निवसति स एव मम स्वर्गः। मम माता देवता अस्ति इति। बालस्य अकल्मषं वाक्यमिदं श्रुत्वा तस्य पुरुषस्य नयनयोः अश्रूणि निर्गतानि। मातृसदृशं यत्किमपि अन्यत् नास्ति इति तेनैव ज्ञातम्। अत एवमुच्यते।

**न मातृसदृशा चान्या**
**त्रिषु लोकेषु देवता।**
**यत्र माता वसत्यद्य**
**स्वर्लोकः स एव हि।।**

**किं वासया वा विचारणीयम्**
**वासः प्रमाणं खलु योग्यतायाः।**
**पीतांबरं वीक्ष्य ददौ स्वकन्याम्**
**चमीम्बरं यदगरलं समुद्रः।।**

**वस्त्रधारणं, तस्य चयनं च जनान् प्रत्यभिज्ञातुं कियन्मात्रं सहायकमिति अनया कथया सूच्यते।**



स्वाधीनतासंग्रामकालेऽयं घटना प्रवृत्ता। एकदा रमाकान्तो नाम एकः स्वातन्त्र्यसमरसेनानी धूमशकटे कोल्कत्तां गच्छन्नासीत्। तदा कश्चन बालःधूमशकटस्य समीपं स्थित्वा वार्तापत्राणि व्यक्रीणत्। तमाहूय रमाकान्तः तस्मात् वार्तापत्रिकां स्वीकृत्य तस्मै शतरुप्यकाणि अदात्। अवशिष्टस्य धनस्य प्रत्यर्पणाय तस्य धनराशिः नासीत्। बालकः अवदत् धन्यात्मन् धनशेषम् आदाय झटित्येव प्रत्यागच्छामि इति। रमाकान्तः तत् स्वीकृतवान्। बालकः ततो आगच्छत्। एतत् सर्वं वीक्ष्य रमाकान्तस्य समीपे कोऽपि वार्ताहरः उपविशन् आसीत्।

सः रमाकान्तम् अपृच्छत्। भवता केन विश्वासेन तस्मै धनं दत्तम्? सः बालकः नूनं पलायनं करिष्यति इति नात्र संशयः ” इति । समयः अतिक्रान्तः। धूमशकटात् यानसूचकं काहलं श्रुतम्। वार्तालेखकः रमाकान्तं सोपहासं व्यलोकयत्। धूमशकटम् मन्दं गमनाय प्रारब्धम्। तदा बालकः यात्रिणाम् अन्तरे दृष्टिगोचरो अभवत्। तेन रमाकान्ताय धनशेषः दत्तः । तथा तस्मै धन्यवादादिकं निवेद्य निरगच्छत् च। वार्तालेखकः किञ्चित् वित्रस्तः, स्तब्धःलज्जाविवशश्च अभवत्। सः रमाकान्तम् अपृच्छत्। पत्रविक्रेतारं बालकं विश्वस्तुं किमपि कारणम् अस्ति वा? तदर्थं मनः कुतः सन्नद्धम्? इति। तदा रमाकान्तः वार्तालेखकम् एवम् अकथयत्। भवान् अस्य बालकस्य वस्त्रं दृष्टवान् वा? तेन खदर् वस्त्रं धृतम्। तदेव तस्योपरि मम विश्वासस्य कारणम्।

---